स्पृशिमृशतिविशतिदशिशिष्लशुपय-
स्त्विषिपिषिविष्लक्रुषितुषिदुषिपुषयः ॥६॥
श्लिष्यतिर्द्विषिरतोघसिवसती
रोहतिर्लुहिरिही अनिङ्गदितौ ।
देग्धिदोग्धिलिहयोर्मिहिवहती
नह्यतिर्दहिरिति स्फुटमनिटः ॥७॥

इति अनिट्कारिका ॥



## ॥ अथ संग्रहश्लोकाः ॥

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥१॥
निमित्तमेकमित्यत्र विभक्त्या नाभिधीयते ।
तद्वदस्तु यदेकत्वं विभक्तिस्तत्र वर्त्तते ॥२॥
ऊर्ध्वं मान किलोन्मानं परिमाण्ं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् सङ्ख्याबाह्या तु सर्वतः ॥३॥
अविकारो द्रव मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥४॥

आकृतिग्रहणाज्जातिर्लिङ्गानां न च सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥५॥
सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः ॥६॥
इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपं ।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥७॥
नकारजावनुस्वारपञ्चमौ धुटि धातुषु ।
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥८॥
उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
विहाराहारसंहारप्रहारप्रतिहारवत् ॥९॥
धात्वर्थो बाधते कश्चित् कश्चित्तमनुवर्त्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥१०॥
फलव्यापारयोरेक निष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मकउदाहृतः ॥११॥
धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥१२॥
नीहृवहिकृषोण्यन्तादुहिभ्रूपृच्छिभिक्षिचिरुधिशास्त्वर्थाः ।
पचियाचिदण्डिकृग्रहमथिजिप्रमुखा द्विकर्माणः ॥१३॥
न्यादीनां कर्मणो मुख्य प्रत्ययो वक्ति कर्मजः ।
नयते गौर्द्विजैर्ग्रामं भारो ग्राममथोह्यते ॥१४॥

गौणं कर्मदुहादीनां प्रत्ययो वक्ति कर्मजः ।
गौः पयो दुह्यतेऽनेन शिष्योऽर्थं गुरुणोच्यते ॥१५॥
बीजकालेषु सम्बद्धा यथा लाक्षा रसादयः ।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥१६॥
बुद्धिस्थादपि सम्बद्धात्तथा धातूपसर्गयोः ।
अभ्यन्तरि कृतो भेदः पदकाले प्रकाश्यते ॥१७॥
निपाताश्चोपसर्गाश्च धातवश्चेत्यमी त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥१८॥
प्रपरापसमन्ववनिर्दुर्भि, र्व्यधिसूदतिनिप्रतिपर्यपयः ।
उपआङिति विंशतिरेपसखे उपसर्गगणःकथितःकविभिः

इति संग्रहश्लोकाः ॥

कलिकालसर्वज्ञ विरचित श्रीसिद्धहेमचंद्र व्याकरणस्थ—

# न्यायसंग्रहः ॥

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥१॥

सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य ॥२॥

ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥३॥

स्वरस्य ह्रस्वदीर्घप्लुताः ॥४॥

आद्यन्तवदेकस्मिन् ॥५॥

प्रकृतिवदनुकरणम् ॥६॥

एकदेशविकृतमनन्यवत् ॥७॥

भूतपूर्वकस्तद्वदुपचारः ॥८।

भाविनि भूतवदुपचारः ॥९॥

यथासङ्ख्यमनुदेशः समानाम् ॥१०॥

विवक्षातः कारकाणि ॥११॥

अपेक्षातोऽधिकारः ॥१२॥

अर्थवशाद्विभक्तिपरिणामः ॥१३॥

अर्थवद्ग्रहणे नानर्थकस्य ॥१४॥

लक्षणप्रतिपदोक्त्योः प्रतिपदोक्तस्यैव ग्रहणम् ॥१५॥

नामग्रहणे लिङ्गविशिष्टस्यापि ॥१६॥

प्रकृतिग्रहणे यङ्लुबन्तस्यापि ॥१७॥

तिपा शवाऽनुबन्धेन निर्दिष्ट यद् गणेन च।
एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि ॥१८॥
सन्निपातलक्षणोविधिरनिमित्त तद्विघातस्य ॥१९॥
असिद्ध बहिरङ्गमन्तरङ्गे ॥२०॥
न स्वरानन्तर्ये ॥२१॥
गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥२२॥
कृत्रिमाकृत्रिमयोः कृत्रिमे ॥२३॥
क्वचिदुभयगतिः ॥२४॥
सिद्धेसत्यारम्भो नियमार्थः ॥२५॥
धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ॥२६॥
नञुक्तं तत्सदृशे ॥२७॥
उक्तार्थानामप्रयोगः ॥२८॥
निमित्ताभावे नैमित्तिकस्यायाप्यभावः ॥२९॥
सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः ॥३०॥
नान्वाचीयमाननिवृत्तौ प्रधानस्य ॥३१॥
निरनुबन्धग्रहणे न सानुबन्धकस्य ॥३२॥
एकानुबन्धग्रहणे न व्यनुबन्धकस्य ॥३३॥
नानुबन्धकृतान्यसारूप्यानेकस्वरत्वानेकवर्णत्वानि ॥
समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि॥

पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥
मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्॥३७॥
य विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ॥३८॥
यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते॥३९॥
येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः ॥
बलवन्नित्यमनित्यात् ॥४१॥
अन्तरङ्ग बहिरङ्गात् ॥४२॥
निरवकाशं सावकाशात् ॥४३॥
वार्णात्प्राकृतम् ॥४४॥
य्वृद् य्वृदाश्रयं च ॥४५॥
उपपदविभक्तेः कारकविभक्तिः ॥४६॥
लुबन्तरङ्गेभ्य ॥४७॥
सर्वेभ्यो लोपः ॥४८॥
लोपात्स्वरादेशः ॥४९॥
आदेशादागमः ॥५०॥
आगमात्सर्वादेशः ॥५१॥
परान्नित्यम् ॥५२॥
नित्यादन्तरङ्गम् ॥५३॥
अन्तरङ्गाच्चानवकाशम् ॥५४॥
उत्सर्गादपवादः ॥५५॥

अपवादात् क्वचिदुत्सर्गोऽपि ॥५६॥

नानिष्टार्था शास्त्रप्रवृत्तिः ॥५७॥

प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम् ॥५८॥

प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ॥५९॥

अदाद्यनदाद्योरनदादेरेव ॥६०॥

प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्यैव ॥६१॥

निरनुबन्धग्रहणे सामान्येन ॥६२॥

साहचर्यात् सदृशस्यैव ॥६३॥

वर्णग्रहणे जातिग्रहणम् ॥६४॥

वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते ॥६५॥

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥६६॥

आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥६७॥

स्वाङ्गमव्यवधायि ॥६८॥

उपसर्गो न व्यवधायी ॥६९॥

येन नाव्यवधान तेन व्यवहितेऽपि स्यात् ॥७०॥

ऋकारापदिष्ट कार्यं लृकारस्यापि ॥७१॥

सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि ॥७२॥

ह्रस्वदीर्घापदिष्टं कार्यं न प्लुतस्य ॥७३॥

सञ्ज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहण न तदन्तस्य ॥७४॥

ग्रहणवता नाम्ना न तदन्तविधिः ॥७५॥

अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधि प्रयोजयन्ति ॥७६॥

गामादाग्रहणेष्वविशेषः ॥७७॥

श्रुतानुमितयोः श्रौतो विधिर्बलीयान् ॥७८॥

अन्तरङ्गानपि विधीन् यणादेशोबाधते ॥७९॥

सकृद्गते स्पर्द्धे यद्बाधित तद्बाधितमेव ॥८०॥

द्वित्वे सति पूर्वस्य विकारेषु बाधको न बाधकः ॥

कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये पश्चाद् वृद्धिस्तबाध्योऽट् च ॥८२॥

पूर्वं पूर्वोत्तरपदयोः कार्यं कार्यं पश्चात्सन्धिकार्यम् ॥

संज्ञा न संज्ञान्तरबाधिका ॥८४॥

सापेक्षमसमर्थम् ॥८५॥

प्रधानस्य तु सापेक्षत्वेऽपि समासः ॥८६॥

तद्धितीयो भावप्रत्ययः सापेक्षादपि ॥८७॥

गतिकारकडस्युक्ताना विभक्तयन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः ॥८८॥

समासतद्धितानां वृत्तिर्विकल्पेन वृत्तिविषये च नित्यैवापवादवृत्तिः ॥८९॥

आदशभ्यः सङ्ख्या सङ्ख्येये वर्त्तते न सङ्ख्याने ॥९०॥

एकशब्दस्यासङ्ख्यात्वं क्वचित् ॥९१॥
णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद्भवति ॥९२॥
द्विर्वद्धं सुबद्धं भवति ॥९३॥
आत्मनेपदमनित्यम् ॥९४॥
क्विपि व्यञ्जनकार्यमनित्यम् ॥९५॥
स्थानिवद्भावपुंवद्भावैकशेषद्वन्द्वैकत्वदीर्घत्वा-
न्यनित्यानि ॥९६॥
अनित्यो णिच्चुरादीनाम् ॥९७॥
णिलोपोऽप्यनित्यः ॥९८॥
णिच्सन्नियोगे एव चुरादीनामदन्तता ॥९९॥
धातवोऽनेकार्थाः ॥१००॥
गत्यार्था ज्ञानार्थाः ॥१०१॥
नाम्नां व्युत्पत्तिरव्यवस्थिता ॥१०२॥
उणादयो अव्युत्पन्नानि नामानि ॥१०३॥
शुद्धधातूनामकृत्रिमं रूपम् ॥१०४॥
क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते ॥
उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक् ॥१०६॥
अवयवे कृतं लिङ्गं समुदायमपि विशिनष्टि चेत्तं
समुदायं सोऽवयवो न व्यभिचरति ॥१०७॥

येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः ॥
यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते न तु सम्भवत्युपसर्गत्वे ॥१०९॥
शीलादिप्रत्ययेषु नासरूपोत्सर्गविधिः ॥११०॥
क्त्यादिष्वन्योऽन्यं नासरूपोत्सर्गविधिः ॥१११॥
स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ ॥११२॥
यावत्सम्भवस्तावद्विधिः ॥११३॥
सम्भवे व्यभिचारे च विशेषणमर्थवत् ॥११४॥
सर्वं वाक्य सावधारणम् ॥११५॥
परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति ॥११६॥
द्वौ नञौ प्रकृतमर्थं गमयतः ॥११७॥
चकारो यस्मात्परस्तत्सजातीयमेव समुच्चिनोति ॥११८॥
चानुकृष्टं नानुवर्त्तते ॥११९॥
चानुकृष्टेन न यथासङ्ख्यम् ॥१२०॥
व्याख्यातो विशेषार्थप्रतिपत्तिः ॥१२१॥
यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते ॥१२२॥
यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः ॥१२३॥

यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ॥१२४॥

येन विना यन्न भवति तत्तस्यानिमित्तस्यापि निमित्तम् ॥१२५॥

नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम् ॥१२६॥

सामान्यातिदेशे विशेषस्य नातिदेशः ॥१२७॥

सर्वत्रापि विशेषेण सामान्यं बाध्यते न तु सामान्येन विशेषः ॥१२८॥

ङित्त्वेन कित्त्वं बाध्यते ॥१२९॥

परादन्तरङ्गं बलीयः ॥१३०॥

प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते ॥१३१॥

विधिनियमयोर्विधिरेव ज्यायान् ॥१३२॥

अनन्तरस्यैव विधिर्निषधो वा ॥१३३॥

पर्जन्यवल्लक्षणप्रवृत्तिः ॥१३४॥

न केवला प्रकृतिः प्रयोक्तव्या ॥१३५॥

क्विबर्थं प्रकृतिरेवाह ॥१३६॥

द्वन्द्वात्परः प्रत्येकमभिसम्बध्यते ॥१३७॥

विचित्राः शब्दशक्तयः ॥१३८॥

किं हि वचनान्न भवति ॥१३९॥

न्यायाः स्थविरयष्टिप्रायाः ॥१४०॥

कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्यविरचित-

# लिङ्गानुशासनम् ।



पुलिङ्ग कटणथपभमयरषसस्वन्तमिमनलौ किश्तिव् ।
ननङौ घघञौ द किर्भावे खोऽकर्तरि च क. स्यात् ॥१॥

हस्तस्तनौष्ठनखदन्तकपोलगुल्फ-
केशाम्बुगुच्छदिनसर्तुपतद्ग्रहाणाम् ।
निर्यासनाकरसकण्ठकुठारकोष्ठ-
हैमारिवर्षविषबोलरथाशनीनाम् ॥२॥

श्वेतप्लवात्मसुरजासिकफाभ्रपङ्क-
मन्थत्विषा जलधिशेवधिदेहभाजाम् ।
मानद्रुमाद्रिविषयाशुगशोणमास-
धान्याध्वराग्निमरुता सभिदा तु नाम ॥३॥

बर्होऽच्छदेऽहिर्वप्रे नीहग्न्योर्ह्रायनबर्हिषौ ।
मस्तु सक्तौ स्फटिकेऽच्छो, नीलमित्रौ मणीनयो ॥४॥

कोणेऽस्त्रश्चपके कोशस्तलस्तालचपेटयो ।
अनातोचे घनो भूम्नि, दारप्राणासुवल्वजा ॥५॥

कान्तश्चन्द्रार्कनामाय परो यानार्थतो युग ।
यश्च स्यादसमाहारे, द्वन्द्वोऽश्ववडवाविति ॥६॥

यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ॥१२४॥

येन विना यन्न भवति तत्तस्यानिमित्तस्यापि
निमित्तम् ॥१२५॥

नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम् ॥१२६॥

सामान्यातिदेशे विशेषस्य नातिदेशः ॥१२७॥

सर्वत्रापि विशेषेण सामान्यं बाध्यते न तु सामान्येन
विशेषः ॥१२८॥

ङित्त्वेन कित्त्व बाध्यते ॥१२९॥

परादन्तरङ्ग बलीयः ॥१३०॥

प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते ॥१३१॥

विधिनियमयोर्विधिरेव ज्यायान् ॥१३२॥

अनन्तरस्यैव विधिर्निषधो वा ॥१३३॥

पर्जन्यवल्लक्षणप्रवृत्तिः ॥१३४॥

न केवला प्रकृतिः प्रयोक्तव्या ॥१३५॥

क्विबर्थं प्रकृतिरेवाह ॥१३६॥

द्वन्द्वात्परः प्रत्येकमभिसम्बध्यते ॥१३७॥

विचित्राः शब्दशक्तयः ॥१३८॥

किं हि वचनान्न भवति ॥१३९॥

न्यायाः स्थविरयष्टिप्रायाः ॥१४०॥

कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्यविरचित-

# लिङ्गानुशासनम् ।



पुलिङ्ग कटणथपभमयरषसस्वन्तमिमनल्लौ किश्तिव् ।
ननडौ घघञौ द किर्भावे खोऽकर्तरि च क स्यात् ॥१॥

हस्तस्तनौष्ठनखदन्तकपोलगुल्फ-
केशाम्बुगुच्छदिनसर्तुपतद्ग्रहाणाम् ।
निर्यासनाकरसकण्ठकुठारकोष्ठ-
हैमारिवर्षविषवोलरथाशनीनाम् ॥२॥

श्वेतप्लवात्ममुरजासिकफाभ्रपङ्क-
मन्थत्विषा जलधिशेवधिदेहभाजाम् ।
मानद्रुमाद्रिविषयाशुगगोणमास-
धान्याध्वराग्निमरुता सभिदा तु नाम ॥३॥

वर्होऽच्छदेऽहिर्वप्रे वीहग्न्योर्हायनवर्हिषौ ।
मस्तु सक्तौ स्फटिकेऽच्छो, नीलमित्रौ मणीनयो ॥४॥

कोणेऽस्रश्चपके कोशस्तलस्तालचपेटयो ।
अनातोधे घनो भूम्नि, दारप्राणासुवल्वजा ॥५॥

कान्तश्चन्द्रार्कनामाय परो यानार्थतो युग ।
यश्च स्यादसमाहारे, द्वन्द्वोऽश्वचडवाविति ॥६॥

वाकोत्तरा नक्तकरल्लकाङ्का, न्युङ्खोत्तरा सङ्गतरङ्गरङ्गा ।
परागपूगौ सृगमस्तुलङ्गकुटङ्गकालिङ्गतमङ्गमङ्गा ॥७॥
वेगसमुद्रावपाङ्गवर्गौ घार्घा मञ्चसपुच्छपिच्छगाच्छा ।
वाजौजकिलिञ्जपुञ्जमुञ्जा अवट पट्टहठप्रकोष्ठकोष्ठा ॥८॥
अङ्गुष्ठगण्डौ लगुडप्रगण्टकरण्डकूष्माण्डगुडा गिखण्ड ।
वरण्डरुण्डौ च पिचण्डनाडीव्रणौ गुणभ्रूणमलक्तकुन्तौ ॥९॥
पोत पिष्टात पृषतश्चोत्पातव्रातावर्थकपर्दौ ।
बुद्बुदगदमगदो मकरन्दो, जनपदगन्धस्कन्धमगाध ॥१०॥
अर्धसुदर्गेनदेवनमहाभिजनजना परिधातनफेनौ ।
पूपापूपौ सूपकलापौ रेफ गोफ स्तम्बनितम्बौ ॥११॥
शम्बाम्बौ पाञ्चजन्यतिष्यौ पुष्य सिचयनिकाय्यरात्रवृत्रा ।
मन्त्रामित्रौ कटप्रपुण्ड्राऽऽरा कल्लोलोल्लौ च खल्लतल्लौ ॥१२॥

कण्डोलपोटगलपुद्गलकालवाला-
वेला गलो जगलहिंगुलगोलफाला ।
स्याद्वेवलो बहुलतण्डुलपत्रपाल-
वातूलतालजडुला भृमलो निचोल ॥१३॥

कामलकुद्दालावयवस्वा, स्रुवरौरवयावा शिवदावौ ।
माधवपणवादीनवहावभ्रुवकोटीशाशा स्पशवशौ ॥१४॥
कुणोड्डीशपुरोडाशवृषकुल्मासनिष्कुहा ।
अहर्निर्यूहकलहा, पक्षराशिवराड्यृषि ॥१५॥

दुदुभिर्वमतिवृष्णिपाण्यविज्ञातिरालिकलयोऽञ्जलिर्घृणि ।
अग्निवह्निकृमयोऽद्रिर्दीदिविग्रन्थिकुक्षिदतयोऽर्देनिर्ध्वनि ॥१६॥
गिरिशिश्रुजायुकर्भ्वौ हाहाहूहूश्च नप्रहूर्गर्मुत ।
पादस्मानावात्मा पाप्मस्थेमोष्मयक्ष्माण ॥१७॥

इति पुल्लिङ्गाधिकार ॥

---

स्त्रीलिङ्ग योनिमद्वम्रीसेनावल्लितडिन्निशाम् ।
वीचितन्द्रावट्पुग्रीवाजिह्वाशत्रीदयादिशाम् ॥१८॥
शिंशपाधा नदीवीणाज्योत्स्नाचीरीतिथीधियाम् ।
अङ्गुलीकलशीकङ्गुहिङ्गुपुत्रीसुरानसाम् ॥१९॥
रास्नाशिलावचालालाशिम्वाकृष्णोपिणकाश्रियाम् ।
स्पृक्कापण्याऽतसीधाय्यासरघारोचनासुवाम् ॥२०॥
हरिद्रामासिदूर्वाऽऽखवलाकाकृष्णलागिराम् ।
इत्तु प्राण्यङ्गवाचि स्यादीदूदेकस्वर कृत ॥२१॥
पात्रादिवर्जितादन्तोत्तरपद समाहारे ।
द्विगुरल्लाबन्तान्तो वाऽन्यस्तु सर्वो नपुसक ॥२२॥
लिन्मिन्यनिण्यणिल्ब्युक्ता, क्वचित्तिगल्पह्रस्वकप् ।
विंशत्याद्याशताद्द्वन्द्वे, सा चैक्ये द्वन्द्वमेययो ॥२३॥
स्रुग्गीतिलतामिदि ध्रुवा, विडनरि वारि घटीभवन्धयो ।
शल्यध्वनिवाद्यभित्सु तु, क्ष्वेडा दुन्दुभिरक्षबिन्दुपु ॥२४॥

गृह्या शाखापुरेऽश्मन्तेऽन्तिका कीला रताहतौ ।
रज्जौ रश्मिर्यवादिर्दोपादौ गङ्गा सुरागृहे ॥२५॥
अहपूर्विकादिर्वर्षा, मघा अप्कृत्तिका बहौ ।
वा तु जलौकोऽप्सरस , सिकतासुमन समा ॥२६॥
गायत्र्यादय इष्टका वृहत्तिका सवर्तिका सर्जिका-
दूषीके अपि पादुका शिरुकया पर्यस्तिका मानिका ।
नीका कञ्चुलिकाऽलुका कलिकया राका पताकाऽम्बिका-
शूका पूपलिका त्रिका चविकयोल्का पञ्जिका पिण्डिका ॥२७॥
ध्रुवका क्षिपका कर्नीनिका, शम्बूका शिविका गवेधुका ।
कणिका केका विपादिका, मिहिका यूका मक्षिकाऽष्टका ॥२८॥
कूर्चिका कूचिका टीका, कोशिका केणिकोर्मिका ।
जलौका प्राविका धूका, कालिका दीर्घिकोष्ट्रिका ॥२९॥
शलाका वालुकेषीका, विहङ्गिकेषिके उखा ।
परिखा विशिखा शाखा, शिखा भङ्गा सुरुङ्गया ॥३०॥
जङ्घा चञ्चा कच्छा पिच्छा, पिञ्जा गुञ्जा खजा प्रजा ।
झञ्झा घटा जटा घोण्टा, पोटा भिस्सटया छटा ॥३१॥
विष्ठा मञ्जिष्ठया काष्ठा, पाठा शुण्डा गुडा जडा ।
वेडा वितण्डया दाढा, राढा रीढाऽवलीढया ॥३२॥
घृणोर्णा वर्वणा स्थूणा, दक्षिणा लिखिता लता ।
तृणता त्रिवृता त्रेता, गीता सीता सिता चिता ॥३३॥

मुक्ता वार्ता ध्रुवताऽनन्ता, प्रसृता मार्जिताऽमृता ।
कन्था मर्यादा गदेक्षुगन्धा गोधा स्वधा सुधा ॥३४॥
सास्ना सूना धाना पम्पा, झम्पा रम्पा प्रपा शिफा ।
कम्बा भम्भा सभा हम्भा, सीमा पामारुमे उमा ॥३५॥
चित्या पद्या पर्या योग्या, छाया माया पेया कस्या ।
दूष्या नस्या शम्या सभ्या, रथ्या कुल्या ज्या मङ्गल्या ॥३६॥
उपकार्या जलार्द्रेरा, प्रतिसीरा परम्परा ।
कण्डराऽसृग्धरा होरा, वागुरा शर्करा सिरा ॥३७॥
गुन्द्रा मुद्रा क्षुद्रा भद्रा, भस्त्रा छन्त्रा यात्रा मात्रा ।
दण्ट्रा फेला वेला मेला, गोला ढोला शाला माला ॥३८॥
मेखला सिध्मला लीला, रसाला सर्वला बला ।
कुहाला शकुला हेला, शिला सुवर्चला कला ॥३९॥
उपला शारिवा मूर्वा, लट्वा खट्वा गिवा दशा ।
कशा कुशेशा मञ्जूषा, शेषा मूपेषया स्नसा ॥४०॥
वस्नसा विस्रसा भिस्सा, नासा वाहा गुहा स्वाहा ।
कक्षाऽऽमिक्षा रिक्षा राक्षा, भङ्ग्यावल्यायतिज्ञोटि ॥४१॥

पेशिर्वासिर्वसतिविपणी नाभिनाल्यालिपालि
भेह्लि पह्लिर्भ्रुकुटिशकटी चर्चरि शाटिभाटी ।
खाटिर्वर्त्तिर्वततिवमिशुण्ठीतिरीतिर्वितर्दि-
र्दर्विर्नीविच्छविलिविशठिश्रेठिजात्याजिराजि ॥४२॥

रुचि सूचिसाची खनि खानिखारी,
खलि कीलितूली क्रमिर्वापिधूली ।
कृपि स्थालिहिण्डी त्रुटिर्वेदिनान्दी,
किकि कुक्कुटि काकलि शुक्तिपक्ती ॥४३॥
किखिस्ताडिकम्बी द्युति शारिराति-
स्तटि कोटिविष्टी वटिर्गृष्टिवीथी ।
दरिर्वल्लरिर्मञ्जरि पुञ्जिभेरी,
शरारिस्तुरि पिण्डमाढी मुषुण्ढि ॥४४॥
राटिराटिरटविः परिपाटि,
फालिगालिजनिकाकिनिकानि ।
चारिहानिवलभि प्रधिकम्पी,
चुल्लिचुण्टितरयोऽहतिशाणी ॥४५॥
सनि सानिमेनी मरिर्मारिरश्चो-
षधी विद्रधिर्झल्लरि पारिरश्रि ।
शिरोधि कवि कीर्तिगन्त्रीकबर्य,
कुमार्याढकी स्वेदनी ह्लादिनीली ॥४६॥
हरिण्यस्मरी कर्तनीस्थग्यपङ्क्त्य,
करीर्येकपद्यक्षवत्य प्रतोली ।
कृपाणीकदल्यौ पलालीहसन्यौ,
वृसी गृध्रसी घर्घरी कर्परी च ॥४७॥

क्षाण्डी खड्डी मदी घटी, गोणी पण्डाल्येपणी द्रुर्णी।
तिलपर्णी केवली खटी, नद्धीरवत्यौ च पातली ॥४८॥

वाली गन्धोली काकली गोष्टचजाजी-
न्द्राणी मत्स्यण्डी दामनी शिम्जिनी च।
शृङ्गी कस्तूरी देहली मौर्व्यतिभ्या-
सन्दी क्षैरेय्य शष्कुलीदर्दुपर्ण्॥४९॥

कर्णान्दुकच्छ्रू तनुरज्जुचञ्चु-
स्नायुर्जुहू सीमधुरो स्फिगर्वाक्।
द्वार्योदिवौ सुक्त्वगृच शरद्वा-
श्छर्दिर्दरत्पामदपद्दृगो नौ ॥५०॥

इति स्त्रीलिङ्गाधिकार।

---

नलस्तुतत्तसयुक्तरुयान्त नपुसकम्।
वेधआदीन् विना सन्त, द्विस्वर मन्त्रकर्तरि ॥५१॥
घनरत्ननभोऽन्नहपीकतमोघुसृणाङ्गणशुक्तशुभाम्बुरुहाम्।
अघगूथजलाशुकदारुमनोविलपिच्छघनुर्दलताल्लहृदाम् ॥५२॥
हलदु खसुखागुरुहिङ्गुरुचल्वचमेषजतुत्थकुसुम्भदशाम्।
मरिचास्थिशिलाभवस्त्रक्रयकन्नलदान्तिकवल्कलसिध्मयुधाम्॥५३
सौवीरस्थानकद्वारक्लोमधौतेयकास्रजाम्।
लवणव्यञ्जनफलप्रसूनद्रवता समित् ॥५४॥

पुर सभाङ्गयोश्छत्रगीर्पयो पुण्डरीकके ।
मधु द्रवे ध्रुव शश्वत्तर्कयो खपुर घटे ॥५५॥
अयूपे दैवेऽकार्यादौ, युग दिष्ट तथा कटु ।
असे द्वन्द्वं स्थले धन्वारिष्टमद्रुमपक्षिणो ॥५६॥
धर्म दानादिके तुल्यभागेऽर्धं ब्राह्मण श्रुतौ ।
न्याय्ये सार पद्ममिभविन्दौ काममनुमतौ ॥५७॥
खल भुवि तथा लक्ष, वेध्येऽह्न सुदिनैकत ।
भूमोऽसख्यात एकार्थे, पथ सख्याव्ययोत्तर ॥५८॥
द्वन्द्वैकत्वाव्ययीभावौ, क्रियाऽव्ययविशेषणे ।
कृत्या क्ताना खल त्रिन्भावे, आ त्वात्त्वादि समूहज ॥५९।
गायत्र्याद्यण्स्वार्थेऽव्यक्तमथानञ्कर्मधारय ।
तत्पुरुषो बहूना चेच्छाया शाला विना सभा ॥६०॥
राजवर्जितराजार्थराक्षसादेः परापि च ।
आदावुपक्रमोपज्ञे, कन्थोशीनरनामनि ॥६१॥
सेनाशालासुराच्छायानिशा वोर्णा शशात्परा ।
भाद्रणो गृहत स्थूणा, सख्याऽदन्ता शतादिका ॥६२॥

मौक्तिकं माक्षिकं सौक्षिक क्लीतक,
नाणक नाटक खेटक तोटकम् ।
आह्निकं रूपक जापकं जालक,
मेणुक गैरक कारक वास्तुकम् ॥६३॥

रुचक धान्याकनि गलाकाऽली-
कालिङकशल्कोपसूर्यकाल्कम् ।
कवककिवुकतोकतिन्तिडीकै-
डूक छत्राकत्रिकोल्मुकानि ॥६४॥

मार्द्वीककदम्बके बुक चिवुककुतुकमनूकचित्रके ।
कुहुक मधुपर्कशीर्षके, शाल्कं कुलक प्रकीर्णकम् ॥६५॥

हल्लीसकपुष्पके खलिङ्ग, स्फिगमङ्गप्रगचोचवीजपिञ्जम् ।
रिष्ट फाण्ट ललाटमिष्ट्युष्टकरोटकपीटचीनपिष्टम् ॥६६॥

शृङ्गाटमोरटपिटान्यथ पृष्ठगोष्ठ,
माण्डाण्डतुण्डगरणग्रहणेरिणानि ।
पिङ्गाणतीक्ष्णलवणद्रविण पुराण,
त्राण शण हिरणकारणकार्मणानि ॥६७॥

पर्याणर्णघ्राणपारायणानि,
श्रीपर्णोष्णे घोरणक्ष्णूणभूतम् ।
प्रादेशान्ताश्मन्तगीत निशान्त
वृन्त तूस्त वार्तवाहित्थमुक्थम् ॥६८॥

अच्छोदगोदकुसिदानि कुसीदतुन्द-
वृन्दास्पद दपदनिम्नसशिल्पतल्पम् ।
कूर्पत्रिविष्टपपरीपवदन्तरीप-
रूपं च पुष्पनिकुरुम्बकुटुम्बशुल्बम् ॥६९॥

असभनलभशुष्माध्यात्मधामेर्मसूक्ष्मं,
क्लिमितलिमतोक्म युग्मतिग्म त्रिसंध्यम् ।
किसलयशयनीये सायखेयेन्द्रियाणि,
द्रुवयभयकलत्रद्वापरक्षेत्रसत्रम् ॥७०॥

शृङ्गवेरमजिराभ्रपुष्कर, तीरमुत्तरमगारनागरे ।
स्फारमक्षरकुकुन्दुरोदरप्रान्तराणि शिविरं कलेवरम् ॥७१॥

सिन्दूरमण्डूरकटीरचामर-
क्रूराणि दूराररवैरचत्वरम् ।
औशीरपातालमुलूखलार्तवे,
सत्त्वं च सान्त्व दिवकिण्वपौतवम् ॥७२॥

विश्व वृग पलिशमर्पिशकिल्विषानु-
तर्षार्पिषं मिषमृचीषमृजीषशीर्षे ।
पीयूषसाध्वसमहानससाहसानि
कासीसमत्सतरस यवस बिसं च ॥७३॥

मन्दाक्षवीक्षमथ सक्थि शयातु यातु,
स्वाद्वाशु तुम्बुरु कशेरु शलालु चालु ।
सयत्ककुम्भहृदहानि पृषत्पुरीतत्,
पर्वाणि रोम च भसच्च जगल्ललाम ॥७४॥

इति नपुसकलिङ्गाधिकार ।

---

पुंस्त्रीलिङ्गश्चतुर्दशेऽङ्के शङ्कुर्निरये च दुर्गति ।
दोर्मूले कक्ष आकरे गञ्जो भूरुहि वाणपिप्पलौ ॥७५॥
नाभिः प्राण्यङ्गके प्रधिर्नेमौ क्वचन वलिर्गृहे कुट ।
श्रोण्यौषध्यो कटो भ्रमो मोहे पिण्डो वृन्दगोलयो ॥७६॥
भकनीनिकयोस्तारो, मेऽश्लेषहस्तश्रवणा ।
कण स्फुलिङ्गे लेशे च, वराटो रज्जुशस्त्रयो ॥७७॥
कुम्भ कलशे तरणि, समुद्रार्कांशुयष्टिषु ।
भागधेयो राजदेये, मेरुजम्ब्वा सुदर्शन ॥७८॥
करेणुर्गजहस्तिन्योरल्याख्यापत्यतद्धित ।
लाजवस्त्रदशौ भून्नीहाद्या प्रत्ययभेदत ॥७९॥
शुण्डिकचर्मप्रसेवकौ सल्लकमल्लकवृश्चिका अपि ।
शल्यकघुटिकौ पिपीलिकश्चुलुकहुडुक्कतुरुष्कतिन्दुका ॥८०॥
शृङ्गोऽथ लम्बभुजशाटसटा सृपाट,
कीट किटस्फटघटा वरट किलाट ।
चोटश्चपेटफटशुण्डगुडा सशाणा,
स्युर्वारिपर्णफणगर्तरथाजमोदा ॥८१॥
विघकूपकलम्बजित्यवर्ध्रा, सहचरसुद्गरनालिकेरहारा ।
बहुकरकृत्सरौ कुठारगारौ, वल्लरशफरमसूरकीलराला ॥८२॥
पटोल कम्बलो मल्लो, दशो गण्डूषवेतसौ ।
लालसो रभसो वर्तिवितस्तिकुटयस्तृटि ॥८३॥

ऊर्मिगम्यौ रल्यरत्नी अवीचि-
लंन्यण्याणिश्रेणय श्रोण्यरण्यौ ।
पार्ष्णीशल्यौ शाल्मलिर्यष्टिमुष्टी,
योनीमुन्यौ स्वातिगव्यूतिवस्त्य ॥८४॥
मेथिर्मेधिमशी मषीपुधी ऋष्टि पाटलिजाटली अहि ।
पृश्निस्तिध्यशनी मणि सृणिमौलि केलिहूलीमरीचय ॥८५॥
हन्वाखु कर्कन्धु सिन्धुर्मृत्युमन्ववट्वोरु ।
ऊरु कन्दु काकु किष्कुर्बाहुर्गवेधू रा गौर्भा ॥८६॥
इति स्त्रीपुंसाधिकार ।

---

पुंनपुंसकलिङ्गोऽब्ज, शङ्खे पद्मोऽब्जसल्ययो ।
कंसोऽपुंसि कुशो बर्हिर्बालो ह्रीवेरकेशयो ॥८७॥
द्वापर संशये छेदे, पिप्पलो विष्टरोतरौ ।
अब्दो वर्षे दरत्रासे, कुकूलस्तुषपावके ॥८८॥
परीवादपर्यङ्कयोर्जन्यतल्पौ,
तपोघर्मवत्सानि माघोष्णाहस्तु ।
वटस्तुल्यतागोलभक्ष्येषु वर्ण,
सितादिस्वराद्यो रणे सपराय ॥८९॥
सैन्धवो लवणे भूत, प्रेते तमो विधुन्तुदे ।
स्वदायौ कस्वरे कृच्छ्रं, व्रते शुक्रोऽग्निमासयो ॥९०॥

कर्पूरस्वर्णयोश्चन्द्र, उडावृक्ष छदे दल ।
धर्म स्वभावे रुचको, भूषाभिन्मातुलङ्गयो ॥९१॥
पाताले वाडवो वर्द्ध , सीसे आमलक फले ।
पिटजङ्गलसत्त्वानि, पिटकामासजन्तुपु ॥९२॥
मधुपिण्डौ सुरातन्वोर्नाम शेवालमध्ययो ।
एकाद्रात्र समाहारे, तथा सूतककूलकौ ॥९३॥

वैनीतकभ्रमरकौ मरको वलीक-
वल्मीकवल्कपुलका फरकव्यलीकौ ।
किञ्जल्ककल्कमणिकस्तवका वितङ्क-
वर्चस्कचूचुकतडाकतटाकतङ्का ॥९४॥

चालक फलकमालकालक,
मूलकस्तिलकपङ्कपातका ।
कोरक फरककन्दुकान्दुका-
ऽनीकनिष्कचपका विशेपक ॥९५॥

शाटककण्टकटङ्कविटङ्का, मञ्चकमेचकनाकपिनाका ।
पुस्तकमस्तकमुस्तकशाका, वर्णकमोदकमूपिकमुष्का ॥९६॥

चण्डातकश्वरकरोचककञ्चुकानि,
मस्तिष्कयावककरण्डकतण्डकानि ।
आतङ्कशूकसरका कटक सशुल्क ,
पिण्याकझर्झरकहसकशङ्खपुङ्खा ॥९७॥

नखमुखमधिकाङ्गं सयुग पद्मरागो,
भगयुगमथ टङ्कोयोगश्शृङ्गा निदाघ ।
क्रकचकवचकूर्चार्धर्चपुच्छोञ्छकच्छा,
व्रजमुटजनिकुञ्जौ कुञ्जभूर्जाम्बुजाश्च ॥९८॥
ध्वजमलयजकूटा कालकूटारकूटौ,
कवटकपटखेटा कर्पटः पिष्टलोष्टौ ।
नटनिकटकिरीटा कर्वट कुक्कुटाट्टौ,
कुटजकुटविटानि त्र्यङ्गट कोट्टकुष्ठौ ॥९९॥
कमठो वारुण्डखण्डषण्डा,
निगडाक्रीडनडप्रकाण्डकाण्डा ।
कोदण्डतरण्टमण्डमुण्डा,
दण्डाण्डौ दृढवारबाणवाणा ॥१००॥
कर्षापण श्रवणपक्वणकङ्कणानि,
द्रोणापराह्णचरणानि तृण सुवर्णम् ।
स्वर्णव्रणौ वृषणभूषणदूषणानि,
भाणस्तथा किणरणप्रवणानि चूर्ण ॥१०१॥
तोरणपूर्तनिकेतनिवाता, पारतमन्तयुतप्रयुतानि ।
क्ष्वेडितमक्षतदैवतवृत्तैरावतलोहितहस्तशतानि ॥१०२॥
मतोपवीतौ पलितो वसन्तध्वान्तायुतधूतनृतानि पुस्त ।
शुद्धान्तवुस्तौ रजतो मुहूर्तद्विर्यूथयूथानि वरूथगृथौ ॥१०३॥

प्रस्थ तीर्थं प्रोथमलिन्द , ककुद कुटुदाष्टापदकुन्दा ।
गुददोहदकुमुदच्छदकन्दार्बुदसौधमथोत्सेधकबन्धौ ॥१०४॥

श्राद्धायुधान्धौषधगन्धमादन-
प्रस्फोटना लग्नपिधानचन्दना ।
वितानराजादनशिश्नयौवना-
पीनोदपानासनकेतनाशनम् ॥१०५॥

नलिनपुलिनमौना वर्धमान समानौ-
दनदिनगतमाना ह्यायनस्थानमाना ।
धननिधनविमानास्ताडनस्तेनवस्ना,
भवनभुवनयानोद्यानवातायनानि ॥१०६॥

अभिधानद्वीपिनौ निपान,
शयन लशुनरसोनगृञ्जनानि ।
खलिनखलीनानुमानदीपा ,
कुणप कुतपावापचापशूर्पा ॥१०७॥

स्तूपोडुपौ विटपमण्डपशष्पचाप्प-
द्वीपानि विष्टपनिपौ शफडिम्बबिम्बा ।
जम्भ कुसुम्भककुभौ कलभो निभार्म-
सक्रामसक्रमललामहिमानि हेम ॥१०८॥

उद्यमकामोद्यामाश्रमकुट्टिमकुसुमसगमा गुल्म ।
क्षेमक्षौमौ कम्बलिवाह्यो मैरेयतूर्यौ च ॥१०९॥

पूयाऽजन्यप्रमयसमया राजसूयो हिरण्या-
रण्ये सख्य मलयवलयौ वाजपेय कषाय ।
शल्य कुन्याान्ययकवियवद्गोमयं पारिहार्यं,
पारावारातिखरशिखरा क्षत्रवक्त्रोपवज्रा ॥११०॥

अलिंजर कूबरकूरवेरनीहारहिञ्जीरसहस्रमेढ्रा ।
ससारसीरौ तुवरश्च सूत्रश्चङ्गारपद्रान्तरकर्णपूरा ॥१११॥

नेत्रं वक्त्रपवित्रपत्रसमरोशीरान्धकारा वर,
केदारप्रवरौ कुलीरगिरिगिराबाडम्बरो गह्वर ।
क्षीरं कोटरचक्रचुक्रतिमिराङ्गारास्तुषार शर,
श्राष्ट्रोपह्वरराष्ट्रतक्रजठरार्द्रा कुञ्जर पञ्जर ॥११२॥

कर्पूरनूपुरकुटीरविहारवार-
कान्तारतोमरदुरोदरवासराणि ।
कासारकेसरकरीरशरीरजीर-
मञ्जीरशेखरयुगधरवज्रवप्रा ॥११३॥

आलवालपलभालपलाला', पल्वल' खलचषालविशाला ।
शूलमूलमुकुलास्तलतैलौ, तूलकुम्भलतमालकपाला ॥११४॥

कवलप्रवालबलशम्बलोत्पलो-
पलशीलशैलशकलाङ्कुलाञ्चला ।
कमल मल मुसलसालकुण्डला,
कल्ल नल निगलनीलमङ्गला ॥११५॥

फाकोलहलाहलौ हलं, कोलाहलकङ्कालवल्कला ।
सौवर्चलधूमले फलं, हालाहलजम्वालखण्डला ॥११६॥

लाङ्गूलगरलाविन्द्रनीलगाण्डीवगाण्डिवा ।
उल्व पारशव पार्श्वापूर्वत्रिदिवताण्डवा ॥११७॥

निष्ठेव प्रग्रीव. शरावराचौ भाचक्लीवशवानि ।
दैव पूर्व पल्लवनल्वौ, पाश कुलिश कर्कशकोशौ ॥११८॥

आकाशकाशकर्णिशाङ्कुशशोषवेषो-
ष्णीषाम्बरीषविषरौहिषमाषमेषा ।
प्रत्यूषयूषमथ कोषकरीषकर्ष-
वर्षामिषा रसबुसेत्थुसचिकसाश्च ॥११९॥

कर्पास आसो दिवसावतसवीतसमासा पनसोपवासौ ।
निर्यासमासौ चमसासकासस्नेहानि वर्हो गृहगेहलोहा ॥१२०॥

पुण्याहदेहौ पटहस्तनूरुहो,
लक्षाऽररिस्थाणुकमण्डलूनि च ।
चाटुश्चटुर्जन्तुकशिप्वनुस्तथा,
जीवातु कुस्तुम्बरु जानु सानु च ॥१२१॥

कम्बु सक्तुदर्विगुरुर्वास्तु पलाण्डु-
र्हिङ्गु शिग्रुर्दोस्तितउ सीव्वथ भूमा ।

षेम प्रेम ब्रह्म गरुड्ोम विहाय ,
कर्माग्रीवत्पक्ष्मधनुर्नाममहिम्नी ॥१२२॥

इति पुन्नपुसकालिङ्गाधिकार ।

---

स्त्रीक्लीबयोर्नखं शुक्तौ, बिम्ब मधुकमौषधे,
माने लक्ष मघौ कल्य, क्रोडोऽङ्के तिन्दुक फले ॥
तरल यवाग्वा पुष्पे, पाटल पटल चये ।
वसन्ततिलकं वृत्ते, कपाल भिक्षुभाजने ॥१२३॥
अर्धपूर्वपदो नावष्टचणकत्रेनटौ क्वचित् ।
चोराधमनोज्ञायकञ् , कथानककशेरुके ॥१२४॥
वंशिकवक्रोष्ठिककन्यकुब्जपीठानि नक्तमवहित्थम् ।
रगन रसनाच्छोदन शुम्ब तुम्ब महोदयं कास्यम् ॥१२५॥
मृगव्यचव्ये च वणिज्यवीर्यनासीरगात्रापरमन्दिराणि ।
तमिस्रशब्दे नगर मसूरत्वक्क्षीरकादम्बरकाहलानि ॥१२६॥
स्थालीकदल्यौ स्थलजालपित्तला-
गोलायुगल्यौ बडिश च छर्दि च ।
अलाबु जम्बूङ्करुष सर सदो,
रोदोऽर्चिषी दाम गुणे त्वयट् तयट् ॥१२७॥

इति स्त्रीनपुसकलिङ्गाधिकार ।

---

स्यतस्त्रिलिङ्ग सरकोऽनुतर्षे शल्ल शले ।
करकोऽब्दोपले कोश , गिम्बा खड्गपिधानयो ॥१२८॥
जीव प्राणेषु केदारे, वल्ज पवने खल ।
बहुल वृत्तनक्षत्रपुराधाभरणाभिधा ॥१२९॥
भल्लातक आमलको, हरीतकनिभीतको ।
तारकाढकपिटकस्फुलिङ्गा विडङ्गतटो ॥१३०॥
पट पुटो वटो वाट , कपाटशकटो कट ।
पेटो मठ कुण्डनीडविषाणास्तूणकङ्कतो ॥१३१॥
मुस्तकुथेङ्गुदजृम्भदाडिमा , पिठरप्रतिसरपात्रकदरा ।
नखरो वल्धरो दर पुरश्छत्रकुवलमृणालमण्डला ॥१३२॥
नालप्रणालपटलार्गलशृङ्खलकन्दला ।
पूलावहेलो कलशकटाहौ षष्टिरेष्विपु ॥१३३॥

इति स्यतस्त्रिलिङ्गाधिकार ।

---

परलिङ्गो द्वन्द्वोऽशी ढेऽर्थो वाच्यवदपत्यमिति नियता ।
अब्रचारोपाभावे गुणवृत्तेराश्रयाद्वचनलिङ्गे ॥१३४॥
प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिका क्वचित् ।
प्रकृतिर्हरीतक्यादिर्न लिङ्गमतिवर्तते ॥१३५॥

वचन तु खलतिकादिर्बह्वर्थोऽस्त्येति पूर्वपदभूता ।
स्त्रीपुनपुंसकाना सह वचने स्यात् पर लिङ्गम् ॥१३६॥
नन्ता सख्या डतिर्युष्मदस्मच्च स्युरलिङ्गका ।
पदं वाक्यमव्यय चेत्यसख्य च तद्बहुलम् ॥१३७॥
नि शेषनामलिङ्गानुशासनान्यभिसमीक्ष्य सक्षेपात् ।
आचार्यहेमचन्द्र समदृभदनुशासनानि लिङ्गानाम् ॥१३८॥

इति कलिकालसर्वज्ञाचार्यश्रीहेमचन्द्रविरचित
लिङ्गानुशासन समाप्तम् ॥



# श्री काव्यानुशासनसूत्राणि ।



१ अकृत्रिमस्वादुपदां परमार्थाभिधायिनीम् ।
सर्वभाषापरिणतां जैनीं वाचमुपास्महे ॥१॥

२ शब्दानुशासनेऽस्माभिः साध्व्यो वाचो विवेचिताः।
तासामिदानीं काव्यत्वं यथावदनुशिष्यते ॥२॥

३ काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च ।

४ प्रतिभाऽस्य हेतुः ।

५ सावरणक्षयोपशममात्रात्सहजा ।

६ मन्त्रादेरौपाधिकी ।

७ व्युत्पत्त्यभ्यासाभ्यां संस्कार्या ।

८ लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः ।

९ काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरभ्यासः ।

१० सतोऽप्यनिबन्धोऽसतोऽपि निबन्धो नियमश्छाया-
याद्युपजीवनादयश्च शिक्षाः ।

११ अदोषौ सगुणौ सालंकारौ च शब्दार्थौ काव्यम् ।

१२ रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः।

१३ अङ्गाश्रिता अलंकाराः ।

१४ तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः ।

१५ मुख्यगौणलक्ष्यव्यङ्ग्यार्थभेदान्मुख्यगौणलक्षकव्यञ्जकाः शब्दाः ।

१६ साक्षात्संकेतविषयो मुख्यः ।

१७ मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः ।

१८ मुख्यार्थसंबद्धस्तत्त्वेन लक्ष्यमाणो लक्ष्यः ।

१९ मुख्याद्व्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ।

२० मुख्याद्यास्तच्छक्तयः ।

२१ वक्त्रादिवैशिष्ट्यादर्थस्यापि व्यञ्जकत्वम् ।

२२ व्यङ्ग्यः शब्दार्थशक्तिमूलः ।

२३ नानार्थस्य मुख्यस्य शब्दस्य संसर्गादिभिरमुख्यस्य च मुख्यार्थबाधादिभिर्नियमिते व्यापारे वस्त्वलङ्कारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः ।

२४ वस्त्वलङ्कारयोस्तद्व्यञ्जकत्वेऽर्थशक्तिमूलः प्रबन्धेऽपि ।

२५ रसादिश्च ।

इति प्रथमोऽध्याय ।

१ विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः ।

२ शृङ्गारहास्यकरुणा रौद्रवीरभयानका बीभत्साद्भुतशान्ता नव रसाः ।

३ स्त्रीपुंसमाल्यादिविभावा जुगुप्सालस्यौग्र्यवर्ज-व्यभिचारिका रतिः संभोगविप्रलम्भात्मा शृङ्गारः ।

४ सुखमयधृत्यादिव्यभिचारी रोमाञ्चाद्यनुभावः सम्भोगः ।

५ शङ्कादिव्यभिचारी सन्तापाद्यनुभावोऽभिलापमानप्रवासरूपो विप्रलम्भः ।

६ दैवपारवश्याभ्यामाद्यो द्वेधा ।

७ प्रणयेर्ष्याभ्यां मानः ।

८ कार्यशापसम्भ्रमैः प्रवासः ।

९ विकृतवेषादिविभावो नासास्पन्दनाद्यनुभावो निद्रादिव्यभिचारी हासो हास्य ।

१० उत्तममध्यमाधमेषु स्मितविहसितापहसितैः स आत्मस्थस्त्रेधा ।

११ एतत्संक्रमजैर्हसितोपहसितातिहसितैः परस्थोऽपि ।

१२ इष्टनाशादिविभावो दैवोपालम्भाद्यनुभावो दुःख-

मयव्यभिचारी शोकः करुणः ।

१३ दारापहारादिविभावो नयनरागाद्यनुभाव औग्र्यादिव्यभिचारी क्रोधो रौद्रः ।

१४ नयादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्मदानयुद्धभेदो वीरः ।

१५ विकृतस्वरश्रवणादिविभावं करकम्पाद्यनुभावं शङ्कादिव्यभिचारि भयं भयानकः ।

१६ अहृद्यदर्शनादिविभावाङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा वीभत्सः ।

१७ दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ।

१८ वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ।

१९ रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः ।

२० धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्याऽवहित्थशङ्काचापलाऽऽलस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्ताऽमर्षत्रासाऽपस्मारनिर्वेदाऽऽवेगवितर्काऽसूयामृतयः स्थि-

स्युदयप्रशमसंधिशबलत्वधर्माणस्त्रयस्त्रिंशद्व्यभि-
चारिणः ।

२१ ज्ञानादेर्धृतिरव्यग्रभोगकृत् ।

२२ सदृशदर्शनादेः स्मृतिर्भ्रूक्षेपादिकृत् ।

२३ शास्त्रचिन्तादेर्मतिः शिष्योपदेशादिकृत् ।

२४ अकार्यकरणज्ञानादेर्व्रीडा वैवर्ण्यादिकृत् ।

२५ इष्टानिष्टदर्शनादेर्जाड्य तूष्णींभावादिकृत् ।

२६ कार्यभङ्गाद्विषादः सहायान्वेषणमुखशोषादिकृत् ।

२७ मद्योपयोगान्मदः स्वापहास्याऽस्मरणादिकृत् ।

२८ विरहादेर्मनस्तापो व्याधिर्मुखशोषादिकृत् ।

२९ क्लमादेर्निद्रा जृम्भादिकृत् ।

३० निद्रोद्भव सुप्तमुत्स्वप्नायितादिकृत् ।

३१ इष्टानुस्मरणादेरौत्सुक्यं त्वरादिकृत् ।

३२ लज्जादेरवहित्थमन्यथा कथनादिकृत् ।

३३ चौर्यादेः स्वपरयोः शङ्का पार्श्वविलोकनादिकृत् ।

३४ रागादेश्चापलं वाक्पारुष्यादिकृत् ।

३५ श्रमादेरालस्यं निद्रादिकृत् ।

३६ प्रियागमादेर्हर्षो रोमाञ्चादिकृत् ।

३७ विद्यादेर्गर्वोऽसूयादिकृत् ।

३८ चौर्यादेरौग्र्यं वधादिकृत् ।

३९ शब्दादेः प्रबोधो जृम्भादिकृत् ।

४० व्याध्यादेर्ग्लानिर्वैवर्ण्यादिकृत् ।

४१ दौर्गत्यादेर्दैन्यममृजादिकृत् ।

४२ व्यायामादेः श्रमोऽङ्गभङ्गादिकृत् ।

४३ इष्टवियोगादेरुन्मादोऽनिमित्तस्मितादिकृत् ।

४४ प्रहारादेर्मोहो भ्रमणादिकृत् ।

४५ दारिद्र्यादेश्चिन्ता संतापादिकृत् ।

४६ आक्षेपादेरमर्षः स्वेदादिकृत् ।

४७ निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत् ।

४८ ग्रहादेरपस्मारः कम्पादिकृत् ।

४९ रोगादेर्निर्वेदो रुदितादिकृत् ।

५० उत्पातादिभ्यः आवेगो विस्मयादिकृत् ।

५१ सदेहादेर्वितर्कः शिरःकम्पादिकृत् ।

५२ परोत्कर्षादेरसूयावज्ञादिकृत् ।

५३ व्याध्यभिघाताभ्यां मृतिर्हिक्काकार्श्यादिकृत् ।

५४ स्तम्भ वेदरोमाञ्चस्वरभेद(स्वर)कम्पवैवर्ण्याश्रुप्रल-
या अष्टौ सात्त्विकाः ।

५५ नरेन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ ।

५६ अनौचित्याच्च ।

५७ व्यङ्गस्य प्राधान्ये काव्यमुत्तमम् ।

५८ असत्संदिग्धतुल्यप्राधान्ये मध्यमं त्रेधा ।

५९ अव्यङ्ग्यमवरम् ।

इति द्वितीयोऽध्याय ।

१ रसादेः स्वशब्दोक्तिः क्वचित्संचारिवर्जं दोषः ।

२ अबाध्यत्वे आश्रयैक्ये नैरन्तर्येऽनङ्गत्वे च विभावादिप्रातिकूल्यम् ।

३ विभावानुभावक्लेशव्यक्तिः पुनःपुनर्दीप्त्याकाण्डप्रथाच्छेदाऽङ्गातिविस्तराऽङ्ग्यऽननुसंधानाऽनङ्गाभिधानप्रकृतिव्यत्ययाश्च ।

४ निरर्थकासाधुत्वे पदस्य ।

५ विसंधिन्यूनाऽधिकोक्ताऽस्थानस्थपदपतत्प्रकर्षसमाप्तपुनराऽत्ताविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य ।

६ अप्रयुक्ताऽश्लीलाऽसमर्थानुचितार्थश्रुतिकटुक्लिष्टाविमृष्टविधेयांशविरुद्धबुद्धिकृच्चान्युभयोः ।

७ कष्टाऽपुष्टव्याहतग्राम्याऽश्लीलसाकाङ्क्षसंदिग्धाऽक्रमपुनरुक्तभिन्नसहचरविरुद्धव्यङ्ग्यप्रसिद्धिवि-

धाविरुद्धत्यक्तपुनरात्तपरिवृत्तनियमानियमविशे-
षसामान्यविध्यनुवादत्वान्यर्थस्य ।

८ नानुकरणे ।

९ वक्त्राद्यौचित्ये च ।

१० क्वचिद्गुणः ।

इति तृतीयोऽध्यायः ।

---

१ माधुर्यौजःप्रसादास्त्रयो गुणाः ।

२ द्रुतिहेतुर्माधुर्यं शृङ्गारे ।

३ शान्तकरुणविप्रलम्भेषु सातिशयम् ।

४ तत्र निजाऽन्त्याक्रान्ता अटवर्गा वर्गा ह्रस्वाऽन्त-
रितौ रणावसमासो मृदुरचना च ।

५ दीप्तिहेतुरोजो वीरबीभत्सरौद्रेषु क्रमेणाधिकम् ।

६ आद्यतृतीयाऽऽक्रान्तौ द्वितीयतुर्यौ युक्तो रेफ-
स्तुल्यश्च टवर्गशषा वृत्तिर्दैर्घ्यमुद्धतो गुम्फश्चात्र ।

७ विकासहेतुः प्रसादः सर्वत्र ।

८ इह श्रुतिमात्रेणार्थप्रत्यायका वर्णवृत्तिगुम्फाः ।

९ वक्तृवाच्यप्रबन्धौचित्याद्वर्णादीनामन्यथात्वमपि ।

इति चतुर्थोऽध्यायः ।

---

## शब्दालंकारा ।

१ व्यञ्जनस्यावृत्तिरनुप्रासः ।

२ तात्पर्यमात्रभेदिनो नाम्नः पदस्य वा लाटानाम् ।

३ सत्यर्थेऽन्यार्थानां वर्णानां श्रुतिक्रमैक्ये यमकम् ।

४ तत्पादे भागे वा ।

५ स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि-
चित्रम् ।

६ अर्थभेदभिन्नाना भङ्गाभङ्गाभ्यां युगपदुक्तिःश्लेषः ।

७ अर्थैक्ये व्यादिभाषाणा च ।

८ उक्तस्यान्येनान्यथाश्लेषादुक्तिर्वक्रोक्तिः ।

९ भिन्ना कृतेः शब्दस्यैकार्थनेव पुनरुक्ताभासः ।

इति पञ्चमोऽध्याय ।

---

## अर्थालंकारा. ।

१ हृद्यं साधर्म्यमुपमा ।

२ सोपमानोपमेयधर्मोपमावाचकानामुपादाने पूर्णा
वाक्ये वृत्तौ च ।

३ एकद्वित्रिलोपे लुप्ता ।

४ असद्धर्मसंभावनमिवादिद्योत्योत्प्रेक्षा ।

५ सादृश्ये भेदेनारोपो रूपकमेकानेकविषयम् ।

६ इष्टार्थसिद्ध्यै दृष्टान्तो निदर्शनम् ।

७ प्रकृताप्रकृताना धर्मैक्य दीपकम् ।

८ सामान्यविशेषे कार्ये कारणे प्रस्तुते तदन्यस्य तुल्ये तुल्यस्य चोक्तिरन्योक्तिः ।

९ व्यङ्ग्यस्योक्तिः पर्यायोक्तम् ।

१० विशेषविवक्षया भेदाऽभेदयोगाऽयोगव्यत्ययोऽतिशयोक्तिः ।

११ विवक्षितस्य निषेध इवोपमानस्याऽऽक्षेपश्चाक्षेपः ।

१२ अर्थाना विरोधाभासो विरोधः ।

१३ सहार्थबलाद्धर्मस्यान्वयः सहोक्तिः ।

१४ श्लिष्टविशेषणैरुपमानधीः समासोक्तिः ।

१५ स्वभावाख्यानं जातिः ।

१६ स्तुतिनिन्दयोरऽन्यतरपरता व्याजस्तुतिः ।

१७ वाक्यस्यार्थनेकार्थता श्लेषः ।

१८ उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्य व्यतिरेकः ।

१९ विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्या समर्थनमर्थान्तरन्यासः ।

२० स्तुत्यै संशयोक्तिः ससंदेहः ।

२१ प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः ।

२२ पर्यायविनिमयौ परावृत्तिः ।

२३ हेतोः साध्यावगमोऽनुमानम् ।

२४ सदृशदर्शनात्स्मरणं स्मृतिः ।

२५ विपर्ययो भ्रान्तिः ।

२६ क्रियाफलाऽभावोऽनर्थश्च विषमम् ।

२७ योग्यतया योगः समम् ।

२८ हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः ।

२९ पृष्टेऽपृष्टे वान्यापोहपरोक्तिः परिसंख्या ।

३० यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला ।

३१ स्वातन्त्र्याऽङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः ।

इति षष्ठोऽध्यायः ।

---

१ समग्रगुणः कथाव्यापी नायकः ।

२ शोभाविलासमधुरललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजांस्यष्टौ सत्त्वजास्तद्गुणाः ।

३ दाक्ष्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धागमिका शोभा ।

४ धीरे गतिदृष्टी सस्मितं वचो विलासः ।

५ मृदुशृङ्गारचेष्टा ललितम् ।

६ क्षोभेष्यनुल्बणं माधुर्यम् ।

७ विघ्नेष्यचल स्थैर्यम् ।

८ हर्षादिविकारानुपलम्भकृद्गाम्भीर्यम् ।

९ स्वपरेषु दानाभ्युपपत्तिसंभाषणान्यौदार्यम् ।

१० पराऽधिक्षेपाद्यसहन तेजः ।

११ धीरोदात्तललितशान्तोद्धतभेदात्स चतुर्धा ।

१२ दक्षिणधृष्टानुकूलशठभेदादेकैकश्चतुर्धा ।

१३ गूढगर्वः स्थिरो धीरः क्षमावान् अविकत्थनः महासत्त्वो दृढव्रतो धीरोदात्तः ।

१४ कलासक्तः सुखी शृङ्गारी मृदुर्निश्चिन्तो धीरललितः ।

१५ विनयोपशमवान् धीरशान्तः ।

१६ शूरो मत्सरी मायी विकत्थनश् छद्मवान् रौद्रोऽवलिप्तो धीरोद्धतः ।

१७ ज्येष्ठायामपि सहृदयो दक्षिणः ।

१८ व्यक्तापराधो धृष्टः ।

१९ एकभार्योऽनुकूलः ।

२० गूढापराधः शठः ।

२१ व्यसनी पापकृल्लुब्धः स्तब्धो धीरोद्धतः प्रतिनायकः ।

२२ तद्गुणा स्वपरसामान्या नायिका त्रेधा ।

२३ स्वयमूढा शीलादिमती स्वा ।

२४ वयःकौशलाभ्यां मुग्धा मध्या प्रौढेति सा त्रेधा ।

२५ धीरा धीराधीरा ऽधीराभेदादन्त्ये त्रेधा ।

२६ पोढापि ज्येष्ठाकनिष्ठाभेदाद् द्वादशधामध्याप्रौढ्योः प्रत्येकं त्रिभेदत्वम् ।

२७ सोत्प्रासवक्रोक्त्या सबाष्पया वाक्पारुष्येण क्रोधिन्यो मध्याधीराद्याः ।

२८ उपचारावहित्थाभ्यामानुकूल्यौदासीन्याभ्यां संतर्जनघाताभ्यां प्रौढाधीराद्याः ।

२९ परोढा परस्त्री कन्या च ।

३० गणिका सामान्या ।

३१ स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता वासकसज्जा विरहोत्कण्ठिता विप्रलब्धा अभिसारिका चेति स्वस्त्रीणामष्टावस्थाः ।

३२ अन्त्यत्र्यवस्था परस्त्री ।

३३ ईर्ष्याहेतुः सपत्नी प्रतिनायिका ।
३४ सत्त्वजा विंशतिः स्त्रीणामलंकाराः ।
३५ ते चायत्नजाः ।
३६ भावहावहेलास्त्रयोऽङ्गजा अल्पभूयोविकारात्मकाः ।
३७ लीलादयो दश स्वाभाविकाः ।
३८ वाग्वेष चेष्टितैः प्रियस्यानुकृतिर्लीला ।
३९ स्थानादीनां वैशिष्ट्य विलासः ।
४० गर्वादल्पाकल्पन्यासः शोभाकृद्विच्छित्तिः ।
४१ इष्टेऽप्यवज्ञा विब्बोकः ।
४२ वागङ्गभूषणाना व्यत्यासो विभ्रमः ।
४३ स्मितहसितरुदितभयरोपगर्वदुःखश्रमाभिलाप संकरः किलिकिंचितम् ।
४४ प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् ।
४५ अधरादिग्रहाद्दुःखेऽपि हर्षः कुट्टमितम् ।
४६ मसृणोऽङ्गन्यासो ललितम् ।
४७ कर्त्तव्यवशादायते एव हस्तादिकर्माणि यद्वैचित्र्यं स विलासः ।
४८ व्याजादेः प्राप्तकालस्याप्यवचनं विहृतम् ।
४९ शोभादयः सप्तायत्नजाः ।
५० रूपयौवनलावण्यैः पुंभोगोपबृंहितैर्मन्दमध्यतीव्रा-

काव्ये शरीरानुगता तन्मुखं परिचक्षते ॥
८ बीजस्योद्घाटन यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ॥
९ उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥
१० गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
क्रोधव्यसनजो वापि स विमर्शः प्रकीर्तितः ॥
११ समानयनमर्थाना मुखाद्याना सबीजिनाम् ।
नानाभावोत्तराणा यद्भवेन्निर्वहण तु तत् ॥
१२ नायकाख्यातस्ववृत्ताभाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ।
१३ धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ।
१४ गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ।
१५ अनिबद्ध मुक्तकादि ।
१६ एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ।
१७ पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ।

इति अष्टमोऽध्याय. ।



कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिता–

## ॥ अयोगव्यवच्छेदिका ॥

अगम्यमध्यात्मविदामवाच्यं
वचस्विनामक्षवता परोक्षम् ।
श्रीवर्धमानाभिधमात्मरूप–
महं स्तुतेर्गोचरमानयामि ॥१॥

स्तुतावशक्तिस्तव योगिनां न किं
गुणानुरागस्तु ममापि निश्चलः ।
इदं विनिश्चित्य तव स्तवं वदन्न
बालिशोऽप्येष जनोऽपराध्यति ॥२॥

क्व सिद्धसेनस्तुतयो महार्था
अशिक्षितालापकला क्व चैषा ।
तथापि यूथाधिपतेः पथिस्थः
स्खलद्गतिस्तस्य शिशुर्न शोच्यः ॥३॥

जिनेन्द्र! यानेव विबाधसे स्म
दुरन्तदोषान् विविधैरुपायैः ।
त एव चित्रं त्वदसूययेव
कृताः कृतार्थाः परतीर्थनाथैः ॥४॥

यथास्थितं वस्तु दिशन्नधीश !
न तादृश कौशलमाश्रितोऽसि ।
तुरङ्गशृगाण्युपपादयद्भ्यो
नमः परेभ्यो नवपण्डितेभ्यः ॥५॥
जगन्त्यनुध्यानबलेन शश्वत्
कृतार्थयत्सु प्रसभं भवत्सु ।
किमाश्रितोऽन्यैः शरण त्वदन्यः
स्वमासदानेन वृथा कृपालुः ॥६॥
स्वयं कुमार्गग्लपिता नु नाम
प्रलम्भमन्यानपि लम्भयन्ति ।
सुमार्गग तद्विदमादिशन्त-
मसूययान्धा अवमन्वते च ॥७॥
प्रादेशिकेभ्यः परशासनेभ्यः
पराजयो यत्तव शासनस्य ।
खद्योतपोतद्युतिडम्बरेभ्यो
विडम्बनेय हरिमण्डलस्य ॥८॥
शरण्य ! पुण्ये तव शासनेऽपि
संदेग्धि यो विप्रतिपद्यते वा ।
स्वादौ स तथ्ये स्वहिते च पथ्ये
संदेग्धि वा विप्रतिपद्यते वा ॥९॥

हिंसाद्यसत्कर्मपथोपदेशाद-
सर्वविन्मूलतया प्रवृत्तेः।
नृशंसदुर्बुद्धिपरिग्रहाच्च
ब्रूमस्त्वदन्यागममप्रमाणम् ॥१०॥

हितोपदेशात्सकलज्ञक्लृप्ते-
र्मुमुक्षुसत्साधुपरिग्रहाच्च।
पूर्वापरार्थेष्वविरोधसिद्धे-
स्त्वदागमा एव सतां प्रमाणम् ॥११॥

क्षिप्येत वान्यैः सदृशीक्रियेत वा
तवाङ्घ्रिपीठे लुठनं सुरेशितुः।
इदं यथावस्थितवस्तुदेशनं
परैः कथंकारमपाकरिष्यते ॥१२॥

तद्दुःषमाकालखलायितं वा
पचेलिमं कर्म भवानुकूलम्।
उपेक्षते यत्तव शासनार्थ-
मयं जनो विप्रतिपद्यते वा ॥१३॥

परःसहस्राः शरदस्तपांसि
युगान्तरं योगमुपासतां वा।
तथापि ते मार्गमनापतन्तो
न मोक्ष्यमाणा अपि यान्ति मोक्षम् ॥१४॥

अनाप्तजाड्यादिविनिर्मितित्व-
संभावनासंभवविप्रलम्भाः ।
परोपदेशाः परमाप्तक्लृप्त-
पथोपदेशे किमु संरभन्ते ॥१५॥

यदार्जवादुक्तमयुक्तमन्यै-
स्तदन्यथाकारमकारि शिष्यैः ।
न विप्लवोऽयं तव शासनेऽभू-
दहो अधृष्या तव शासनश्रीः ॥१६॥

देहाद्ययोगेन सदाशिवत्वं
शरीरयोगादुपदेशकर्म ।
परस्परस्पर्धि कथं घटेत
परोपक्लृप्तेष्वधिदैवतेषु ॥१७॥

प्रागेव देवांतरसंश्रितानि
रागादिरूपाण्यवमान्तराणि ।
न मोहजन्या करुणापीश !
समाधिमाध्यस्थ्ययुगाश्रितोऽसि ॥१८॥

जगन्ति भिन्दन्तु सृजन्तु वा पुन-
र्यथा तथा वा पतयः प्रवादिनाम् ।
त्वदेकनिष्ठे भगवन् भवक्षय-
क्षमोपदेशे तु परं तपस्विनः ॥१९॥

वपुश्च पर्यंकशयं श्लथ च
दृशौ च नासानियते स्थिरे च।
न शिक्षितेयं परतीर्थनाथै-
र्जिनेन्द्र! मुद्रापि तवान्यदास्ताम् ॥२०॥

यदीयसम्यक्त्वबलात् प्रतीमो
भवादृशानां परमस्वभावम्
कुवासनापाशविनाशनाय
नमोऽस्तु तस्मै तव शासनाय ॥२१॥

अपक्षपातेन परीक्षमाणा
द्वय द्वयस्याप्रतिमं प्रतीमः।
यथास्थितार्थप्रथनं तवैत-
दस्थाननिर्बंधरसं परेषाम् ॥२२॥

अनाद्यविद्योपनिषन्निषण्णै-
र्विशृंखलैश्चापलमाचरद्भिः।
अमूढलक्ष्योऽपि पराक्रिये य-
त्त्वत्किंकरः किं करवाणि देव! ॥२३॥

विमुक्तवैरव्यसनानुबन्धाः
श्रयन्ति यां शाश्वतवैरिणोऽपि।
परैरगम्या तव योगिनाथ!
तां देशनाभूमिमुपाश्रयेऽहम् ॥२४॥

मदेन मानेन मनोभवेन,
क्रोधेन लोभेन च संमदेन।
पराजितानां प्रसभं सुराणा
वृथैव साम्राज्यरुजा परेषाम् ॥२५॥

स्वकण्ठपीठे कठिनं कुठार
परे किरन्तः प्रलपन्तु किंचित्।
मनीषिणां तु त्वयि वीतराग!
न रागमात्रेण मनोऽनुरक्तम् ॥२६॥

सुनिश्चितं मत्सरिणो जनस्य
न नाथ! मुद्रामतिशेरते ते।
माध्यस्थ्यमास्थाय परीक्षका ये
मणौ च काचे च समानुबंधाः ॥२७॥

इमा समक्षं प्रतिपक्षसाक्षिणा-
मुदारघोषामवघोषणां ब्रुवे।
न वीतरागात्परमस्ति दैवत
न चाप्यनेकान्तमृते नयस्थितिः ॥२८॥

न श्रद्धयैव त्वयि पक्षपातो
न द्वेषमात्रादरुचिः परेषु।
यथावदाप्तत्वपरीक्षया तु
त्वामेव वीर प्रभुमाश्रिताः स्मः ॥२९॥

तमःस्पृशामप्रतिभासभाजं
भवन्तमप्याशु विविन्दते याः ।
महेम चन्द्रांशुदृशावदाता
स्तास्तर्कपुण्या जगदीशवाचः ॥३०॥

यत्र तत्र समये यथा तथा
योऽसि सोऽस्यभिधया यया तया ।
वीतदोषकलुषः स चेद्भवा-
नेक एव भगवन्नमोऽस्तु ते ॥३१॥

[ उपसंहारकाव्यम् ]

इदं श्रद्धामात्रं तदथ परनिन्दा मृदुधियो
विगाहन्तां हन्त प्रकृतिपरवादव्यसनिनः ।
अरक्तद्विष्टानां जिनवर ! परीक्षाक्षमधिया-
मयं तत्त्वालोकः स्तुतिमयमुपाधि विधृतवान् ॥३२॥

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिता-

# ॥ अन्ययोगव्यवच्छेदिका ॥



अनन्तविज्ञानमतीतदोष-
मबाध्यसिद्धान्तममर्त्यपूज्यम् ।
श्रीवर्धमानं जिनमाप्तमुख्य,
स्वयम्भुवं स्तोतुमहं यतिष्ये ॥१॥

अयं जनो नाथ ! तव स्तवाय
गुणान्तरेभ्यः स्पृहयालुरेव ।
विगाहतां किन्तु यथार्थवाद-
मेकं परीक्षाविधिदुर्विदग्धः ॥२॥

गुणेष्वसूयां दधतः परेऽमी
मा शिश्रियन्नाम भवन्तमीशम् ।
तथापि संमील्य विलोचनानि
विचारयन्तां नयवर्त्म सत्यम् ॥३॥

स्वतोऽनुवृत्तिव्यतिवृत्तिभाजो
भावा न भावान्तरनेयरूपाः ।
परात्मतत्त्वादतथात्मतत्त्वाद्
द्वयं वदन्तोऽकुशलाः स्खलन्ति ॥४॥

आदीपमाव्योम समस्वभावं
स्याद्वादमुद्रानतिभेदि वस्तु ।
तन्नित्यमेवैकमनित्यमन्य-
दिति त्वदाज्ञाद्विषतां प्रलापाः ॥५॥

कर्तास्ति कश्चिद् जगतः स चैकः
स सर्वगः स स्ववशः स नित्यः ।
इमाः कुहेवाकविडम्बनाः स्यु-
स्तेषा न येषामनुशासकस्त्वम् ॥६॥

न धर्मधर्मित्वमतीवभेदे
वृत्त्यास्ति चेन्न त्रितयं चकास्ति ।
इहेदमित्यस्ति मतिश्च वृत्तौ
न गौणभेदोऽपि च लोकबाधः ॥७॥

सतामपि स्यात् क्वचिदेव सत्ता
चैतन्यमौपाधिकमात्मनोऽन्यत् ।
न संविदानन्दमयी च मुक्तिः
सुसूत्रमासूत्रितमत्वदीयैः ॥८॥

यत्रैव यो दृष्टगुणः स तत्र
कुम्भादिवन्निष्प्रतिपक्षमेतत् ।
तथापि देहाद् बहिरात्मतत्त्व-
मतत्त्ववादोपहताः पठन्ति ॥९॥

स्वयं विवादग्रहिले वितण्डा-
पाण्डित्यकण्डूलमुखे जनेऽस्मिन् ।
मायोपदेशात् परमर्म भिन्दन्
अहो ! विरक्तो मुनिरन्यदीयः ॥१०॥

न धर्महेतुर्विहितापि हिंसा
नोत्सृष्टमन्यार्थमपोद्यते च ।
स्वपुत्रघातान्नृपतित्वलिप्सा-
सब्रह्मचारिस्फुरितं परेषाम् ॥११॥

स्वार्थावबोधक्षम एव बोधः
प्रकाशते नार्थकथान्यथा तु ।
परे परेभ्यो भयतस्तथापि
प्रपेदिरे ज्ञानमनात्मनिष्ठम् ॥१२॥

माया सती चेद् द्वयतत्त्वसिद्धि-
रथासती हन्त कुतः प्रपञ्चः ।
मायैव चेदर्थसहा च तत्किं
माता च वन्ध्या च भवत्परेषाम् ॥१३॥

अनेकमेकात्मकमेव वाच्यं
द्वयात्मकं वाचकमप्यवश्यम् ।
अतोऽन्यथा वाचकवाच्य-
क्लृप्तावतावकानां प्रतिभाप्रमादः ॥१४॥

चिदर्थशून्या च जडा च बुद्धिः
शब्दादितन्मात्रजमम्बरादि ।
न बन्धमोक्षौ पुरुषस्य चेति
कियज्जडैर्न ग्रथितं विरोधि ॥१५॥

न तुल्यकालः फलहेतुभावो
हेतौ विलीने न फलस्य भावः ।
न संविदद्वैतपथेऽर्थसंविद्
विलूनशीर्णं सुगतेन्द्रजालम् ॥१६॥

विना प्रमाणं परवन्न शून्यः
स्वपक्षसिद्धेः पदमश्नुवीत ।
कुप्येत्कृतान्तः स्पृशते प्रमाण-
महो सुदृष्टं त्वदसूयिदृष्टम् ॥१७॥

कृतप्रणाशाकृतकर्मभोग-
भवप्रमोक्षस्मृतिभङ्गदोषान् ।
उपेक्ष्य साक्षात् क्षणभङ्गमिच्छ-
न्नहो महासाहसिकः परस्ते ॥१८॥

सा वासना सा क्षणसन्ततिश्च
नाभेदभेदानुभयैर्घटेते ।
ततस्तटादर्शिशकुन्तपोत-
न्यायात्त्वदुक्तानि परे श्रयन्तु ॥१९॥

विनानुमानेन पराभिसन्धि-
मसंविदानस्य तु नास्तिकस्य ।
न साम्प्रतं वक्तुमपि क्व चेष्टा
क्व दृष्टमात्रं च हहा प्रमादः ॥२०॥

प्रतिक्षणोत्पादविनाशयोगि-
स्थिरैकमध्यक्षमपीक्षमाणः ।
जिन ! त्वदाज्ञामवमन्यते यः
स वातकी नाथ ! पिशाचकी वा ॥२१॥

अनन्तधर्मात्मकमेव तत्त्व-
मतोऽन्यथा सत्त्वमसूपपादम् ।
इति प्रमाणान्यपि ते कुवादि-
कुरङ्गसंत्रासनसिंहनादाः ॥२२॥

अपर्यय वस्तु समस्यमान-
मद्रव्यमेतच्च विविच्यमानम् ।
आदेशभेदोदितसप्तभङ्ग-
मदीदृशस्त्वं बुधरूपवेद्यम् ॥२३॥

उपाधिभेदोपहितं विरुद्ध
नार्थेष्वसत्त्वं सदवाच्यते च ।
इत्यप्रबुध्यैव विरोधभीता
जडास्तदेकान्तहताः पतन्ति ॥२४॥

स्यान्नाशि नित्यं सदृशं विरूपं
वाच्यं न वाच्यं सदसत्तदेव ।
विपश्चितां नाथ ! निपीततत्त्व-
सुधोद्गतोद्गारपरम्परेयम् ॥२५॥

य एव दोषाः किल नित्यवादे
विनाशवादेऽपि समास्त एव ।
परस्परध्वंसिषु कण्टकेषु
जयत्यधृष्यं जिन ! शासनं ते ॥२६॥

नैकान्तवादे सुखदुःखभोगौ
न पुण्यपापे न च बन्धमोक्षौ ।
दुर्नीतिवादव्यसनासिनैवं
परैर्विलुप्तं जगदप्यशेषम् ॥२७॥

सदेव सत् स्यात्सदिति त्रिधार्थो
मीयेत दुर्नीतिनयप्रमाणैः ।
यथार्थदर्शी तु नयप्रमाण-
पथेन दुर्नीतिपथं त्वमास्थः ॥२८॥

मुक्तोऽपि वाभ्येतु भवं भवो वा
भवस्थशून्योऽस्तु मितात्मवादे ।
षड्जीवकायं त्वमनन्तसंख्य-
माख्यस्तथा नाथ ! यथा न दोषः ॥२९॥

अन्योऽन्यपक्षप्रतिपक्षभावाद्
यथा परे मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छन्
न पक्षपाती समयस्तथा ते ॥३०॥

वाग्वैभवं ते निखिलं विवेक्तु-
माशास्महे चेन्महनीयमुख्य ! ।
लङ्घेम जङ्घालतया समुद्रं
वहेम चन्द्रद्युतिपानतृष्णाम् ॥३१॥

[ उपसंहारकाव्यम् ]

इदं तत्त्वाऽतत्त्वव्यतिकरकरालेऽन्धतमसे
जगन्मायाकारैरिव हतपरैर्हा ! विनिहितम् ।
तदुद्धर्तुं शक्तो नियतमविसंवादिवचन-
स्त्वमेवातस्त्रातस्त्वयि कृतसपर्याः कृतधियः ॥३२॥



❀ पुस्तकप्राप्तिस्थानम् । ❀

श्री ऋषभदेवजी छगनरामजी की पेढी

ठि. श्री सिद्धचक्राराधनतीर्थ,

दहेरा खिड़की, खाराकुवा,

उज्जैन ( मालवा–C I )